माचष्टे। SRV. I. 89. 10. p. i. 399.

4. 24:–अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनमित्यादि निरुक्तमत्रानुसंधेयम्। SRV. IV. 38. 5. p. ii. 454.

4. 24:–भर इति संग्रामनाम भरतेर्वा हरतेर्वा इति यास्कः। SRV. I. 132. 1. p. i. 598.

4. 24:–तदुक्तं यास्केन। मन्दी मन्दतेः स्तुतिकर्मणः। SRV. I. 101. 1. p. i. 446.

4. 25:–अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपचितमपगतमपिहितमन्तर्हितं वा। SRV. I. 84. 15. p. i. 379.

4. 25:–बृहस्पते यच्चातयसि देवपीयुमिति निरुक्तम्। SRV. I. 190.5. p. i.788.

4. 25:–तथा च यास्कः। ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते। SRV. IX. 64. 30. p. iii. 683.

4. 25:–तथा च यास्कः। अस्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे तीव्रार्थतरमुदात्तमल्पीयोऽर्थतरमनुदात्तम्। SRV. VII. 34. 4. p. iii. 78.

4. 25:–अजाश्वेति पूषणमाहेति यास्कः। SRV. I. 138. 4. p. i. 618.

4. 26:–वृषभं कामानां वर्षितारं पतिं सोमस्य पातारं यजमानानां पालयितारं वा। पाता वा पालयिता वा। SRV. I. 9. 4. p. i. 65.

4. 27:–अयमपि मन्त्रो यास्केन सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः। SRV. I. 164. 2. p. i. 697.

4. 27:–चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वेति निरुक्तम्। SRV. X. 101. 7. p. iv. 336.

4. 27:–द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानादित्यादि निरुक्तम्। SRV. I. 164. 48. p. i. 718.

5. 1:–नरा मनुष्या नृत्यन्ति कर्मस्विति यास्कः। SRV. I. 149. 2. p. i. 652.

5. 1:–अत्र यास्कः। आ सिञ्चतामत्रैर्मदनीयमन्धोऽमत्रं पात्रममा अस्मिन्नदन्ति। SRV. II. 14. 1. p. ii. 41.

5. 1:–तमोऽप्यन्ध उच्यते नास्मिन्ध्यानं भवति। इति यास्कः। SRV. I. 62. 5. p. i. 307.

5. 2:–तथा च यास्कः। असज्यमाने इति वा व्युदस्यन्त्याविति वा बहुधारे उदकवत्यौ। SRV. VI. 70. 2. p. ii. 880.

5. 2:–वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। इति यास्कः। SRV. I. 73. 9. p. i. 347.

5. 2:–तथा च यास्कः। वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति। SRV. I. 121. 10. p. i. 547.

5. 2:–नदनस्य मा रुधतः काम आगमदिति निरुक्तम्। SRV. I. 179. 4. p. i. 758.

5. 3:–तथा च यास्कः। स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्तत्त्विप्रमग्निरकरोज्जातवेदाः। SRV. X. 88. 4. p. iv.279.

5. 3:–अत्र यास्कः। स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनम्। SRV. VIII. 72. 4. p. iii. 509.

5. 3:–द्वितीयपादमेवं यास्को व्याचख्यौ। द्विता च सत्ता स्वधया च शंभुः। द्वैधं सत्ता मध्यमे च स्थान उत्तमे च शंभुः सुखभुः। SRV.

III. 17. 5. p. ii. 184.

5. 4:—अत्र निरुक्तम् । वराहो मेघो भवति । वराहारः । वरमाहारमाहार्षीरिति च ब्राह्मणमिति । SRV. I. 61. 7. p. i. 299.

5. 4:—अत्र निरुक्तम् । अथाप्येते माध्यमका देवगणा वराहव उच्यन्ते पश्यन्हिरण्यचक्रान् । SRV. I. 88. 5. p. i. 394.

5. 4:—स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एतानि सारयति । उस्रा इव स्वसराणीत्यपि निगमो भवति । SRV. I. 3. 9. p. i. 39.

5. 4:—अत्र यास्कः । स्वसराण्यहानि स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति । SRV. VIII. 88. 1. p. iii. 543.

5. 4:—शर्या इषवः शरमय्य इति यास्कः । SRV. I. 148. 4. p. i. 651.

5. 4:—अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदेनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना । SRV. I. 10. 1. p. i. 68.

5. 4:—अर्को मन्त्रो भवति यदेनेनार्चन्ति । SRV. I. 7. 1. p. i. 55.

5. 4:—अर्को मन्त्रो भवति यदेनेनार्चन्ति । इति यास्कः । SRV. I. 62. 1; VI. 73. 3. pp. i. 304; ii. 886.

5. 5:—गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव । वंशो वनशयो भवति वननाच्छ्रूयत इति वा । SRV. I. 10. 1. p. i. 68.

5. 5:—पवी रथनेमिर्भवति यद्विपुनाति भूमिमिति निरुक्तम् । SRV. I. 138. 3. p. i. 620.

5. 5:—पवी रथनेमिर्भवतीति यास्कः । SRV. I. 88. 2. p. i. 393.

5. 5:—पवी रथनेमिर्भवति । इति यास्कवचनात् । SRV. V. 62. 2. p. ii. 642.

5. 5:—धन्वान्तरिक्षं धन्वन्त्यस्मादाप इति यास्कः । SRV. I. 95. 10. p. i. 431.

5. 5:—सिनमन्नं भवति सिनाति भूतानीति यास्कः । SRV. I. 61. 4. p. i. 297.

5. 4:—सचा सहेत्युक्तम् । SRV. I. 7. 2. p. i. 55.

5. 5:—सचा सहेत्यर्थ इति । SRV. I. 34. 11. p. i. 185.

5. 5:—द्युम्नं द्योततेर्यशो वान्नं वा । SRV. I. 37. 4; 48. 16; 127. 9; VIII. 103. 9; IX. 61. 29; 98. 1; X. 115. 7. pp. I. 200, 246, 578; iii. 600, 670, 792; IV. 385.

5. 5:—तथा च यास्कः । द्युम्नं द्योततेर्यशो वान्नं वा । अस्मे द्युम्नमधिरत्नं च धेहि । अस्मासु द्युम्नं च रत्नं च धेहि । SRV. VII. 25. 3. p. iii. 57.

5. 7:—अत्र निरुक्तम् । बहुदाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेः । ईश्वरोऽप्यरिरेतस्मादेव । यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद्दृष्ट्वैवमवक्ष्यत् तोदस्येव शरण आ महस्य तुदस्येव शरणेऽधि महतः । SRV. I. 150. 1. p. i. 653.

5. 8:—अत्र निरुक्तम् । शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः । किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः ।

अपि वा प्रशंसानामैवाभिप्रेतं स्यात्। SRV. VII. 100. 6. p. iii. 208.

5. 8:–किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति । मा वर्पो अस्मदप गूह एतत्। वर्प इति रूपनाम वृणोतीति सतः । यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः । SRV. VII. 100. 6. p. iii. 208.

5. 9:–अत्र निरुक्तम । पृथुज्रयाः पृथुजवः । पृथुज्रया अमिनादायुर्दस्योः । प्रामापयदायुर्दस्योः । SRV. III. 49. 2. p. ii. 288.

5. 10:–दीधितयोऽङ्गुलयो भवन्ति धीयन्ते कर्मसु। अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्याजनयन्त प्रशस्तं दूरेदर्शनं गृहपतिमतनवन्तम् । SRV. VII. 1. 1. p. iii. 1.

5. 11:–नैरुक्तप्रसिद्ध्या तु कालाभिमानीन्द्रः। त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्य च सन्ति। तानेकरूपमनुभवतीति । एतत्सर्वमेकेन प्रतिधानेनापिबत् । इत्यादि निरुक्ते तद्व्याख्याने च स्पष्टमुक्तम् । तदत्र द्रष्टव्यम् । SRV. VIII. 77. 4. p. iii. 523.

5. 11:–आङ्गूषः स्तोम आघोषः । इति यास्कः । SRV. I. 61. 2; 62. 1. pp. i. 297, 304.

5. 11:–तथा च यास्कः । अध्रिगुगमनकर्मवज्रिन्द्रोऽप्यध्रिगुरुच्यते । SRV. I. 61. 1. p. i. 296.

5. 11:–अत्र यास्कः । आङ्गूषः स्तोम आघोषः । अनेन स्तोमेन वयमिन्द्रवन्तः । SRV. I. 105. 19. p. i. 468.

5. 12:–तदुक्तं यास्केन । तृपलप्रभर्मा क्षिप्रप्रहारीति । SRV. IX. 97. 8. p. iii. 778.

5. 12:–तथा च यास्कः । आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी सोमो वेन्द्रो वा धुनिर्धूनोतेः शिमीति कर्मनाम शमयतेर्वा शक्नोतेर्वा । ऋजीषी सोमो यत्सोमस्य पवमानस्यातिरिच्यते तदृजीषमपार्जितं भवति तेनर्जीषी सोमोऽथाप्यैन्द्रो निगमो भवत्यृजीषी वज्रीति । सोमः सर्वाण्यतसानि वनानि नार्वागिन्द्रं प्रतिमानानि दभ्नुवन्ति येरेनं प्रतिमिमते नेनं तानि दभ्नुवन्ति । SRV. X. 89. 5. p. iv. 284.

5. 13:–उर्वेभ्यश्नुत ऊरुभ्यामश्नुत इति यास्कः। SRV. IV. 2. 18. p. ii. 353.

5. 13:–तथा च यास्कः । अप्स इति रूपनाम। SRV. VII. 4. 6. p. iii. 14.

5. 15:–गध्यं गृह्णातेरिति यास्कः । SRV. I. 126. 6. p. i. 572

5. 15:–ऋज्रा वाजं न गध्यं युयूषन्नित्यपि निगमो भवतीति निरुक्तम्। SRV. IV. 16. 11. p. ii. 391.

5. 15:–गध्यतिर्मिश्रीभावकर्मेति यास्कः । SRV. I. 126. 6; V. 38. 4. pp. i. 572; ii. 454.

5. 15:–तथा च यास्कः । य आरितः कर्मणि कर्मणि स्थिरः प्रत्यृतः स्तोमान्। SRV. VIII. 33. 5. p. iii. 392. Cf. also. I. 101. 4. p. i. 447.

5. 16:–वीळयतिश्च व्रीळयतिश्च संस्तम्भकर्मा-

णाविति यास्कः। SRV. II. 24. 3. p. ii. 70.

5. 16:–अत्र निरुक्तम्। निष्षपी स्त्रीकामो भवति विनिर्गतसपः। सपः सपतेः स्पृशतिकर्मणः। मा नो मघेव निष्षपी परादाः स यथा धनानि विभजति मा नस्त्वं तथा परादाः। SRV. I. 104. 5. p. i. 459.

5. 16:–सपतिः स्पृशतिकर्मेति नैरुक्ताः। SRV. IX. 97. 37. p. iii. 786.

5. 16:–बन्दी बन्दतेर्मृदूभावकर्मणः। निवृणक्ति यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा धनानीति वा। SRV. I. 54. 5. p. i. 275.

5. 16:–तथा च यास्कः। तूर्णाशमुदकं भवति तूर्णमश्नुते। SRV. VIII. 32. 4. p. iii. 387.

5. 17:–अत्र निरुक्तम्। क्षुम्पमहिच्छत्रकं भवति यत् क्षुभ्यते। कदा मर्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति। कदा नः श्रोष्यति गिर इन्द्रोऽङ्ग। अङ्गेति क्षिप्रनाम। SRV. I. 84. 8. p. i. 376.

5. 17:–किंच निचुम्पुणः। निचान्तपृणः। इति यास्कः। SRV. VIII. 93. 22. p. iii. 563.

5. 19:–पदिरिति पदं व्याचक्षाणेन यास्केन तदुदाहरणमयं मन्त्रो व्याख्यातः। सुगुर्भवति ततनाश्वेति। SRV. I. 125. 2. p. i. 568.

5. 20:–अत्र निरुक्तम्। वृकश्चन्द्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रान्तज्योतिष्को वा। अरुण आरोचनो मासकृन्मासानां चार्धमासानां च कर्ता भवति चन्द्रमा वृकः पथायन्तं ददर्श नक्षत्रगणमभिजिहीते। विचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमास्तक्ष्णुवन्निव पृष्ठरोगी। SRV. I. 105. 18. p. i. 468.

5. 21:–तथा च यास्कः। आदित्योऽपि वृक उच्यते यदावृङ्क्ते। आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानम्। SRV. I. 117. 16. p. i. 528.

5. 22:–अत्र निरुक्तम्। जोषवाकमित्यविज्ञातनामधेयं जोषयितव्यं भवति। य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तेष्वृतस्य वर्धयितारौ न तस्याश्नीथः। योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ देवौ न तस्याश्नीथः। SRV. VI. 59. 4. p. ii. 849.

5. 22:–अत्र यास्कः। कृत्तिः कृन्ततेर्यशो वान्नं या महीव कृत्तिः शरणा त इन्द्र सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति। SRV. VIII. 90. 6. p. iii. 549.

5. 22:–तथा च यास्कः। श्वघ्नी कितवो भवति स्वं हन्ति। SRV. VIII. 45. 38. p. iii. 435.

5. 23:–अत्र मा नः सर्वस्य दुर्धियः। इत्यादि निरुक्तं द्रष्टव्यम्। SRV. VIII. 75. 9. p. iii. 519.

5. 23:–उरुष्यती रक्षाकर्मा। SRV. I. 58. 8; 91. 15; 119. 6; 158. 4; VIII. 71. 7; X. 176. 4; pp. i. 290, 406, 537, 672; iii. 506; iv. 501.

5. 24:–हविषापां जरयिता पिपर्ति पपुरि-

रिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः। SRV. I. 46. 4. p. i. 232.

5. 24:–तथा च यास्कः। शम्ब इति वज्रनाम शमयतेर्वा शातयतेर्वा। N. X. 42. 7. p. iv. 127.

5. 25:–तथा च यास्कः। पृथक् प्रायन् पृथक् प्रथतेः प्रथमा देवहूतयो ये देवानाह्वयन्ताकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैर्येऽशक्नुवन्याज्ञियां नावमारोढुमथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीमैव ते न्यविशन्त ऋणेनैव ते न्यविशन्तास्मिन्नेव लोक इति वा। SRV. X. 45. 6. p. iv. 132.

6. 1:–अत्र त्वमग्ने द्युभिरहोभिरित्यादि निरुक्तमनुसंधेयम्। SRV. II. 1. 1. p. ii. 1.

6. 1:–आशु इति च शु इति च क्षिप्रनामनी भवत इति निरुक्तम्। SRV. IV. 58. 7. p. ii. 493.

6. 1:–काशिर्मुष्टिः। इति यास्कः। SRV. III. 30. 5. p. ii. 219.

6. 1:–रोधः कूलं निरुणद्धि स्रोतः। SRV. I. 38. 11. p. i. 206.

6. 1:–तथा च यास्कः। अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम्। SRV. III. 30. 8. p. ii. 220.

6. 2:–एतामृचं यास्क एवं व्याख्यत्। अलातृणो वल इन्द्र व्रजो गोः। अलातृणोऽलमातर्दनो मेघो वलो वृणोतेर्व्रजो व्रजत्यन्तरिक्षे गोरेतस्या माध्यमिकाया वाचः पुरा हननाद्भयमानो व्यार। सुगान्पथो अकृणोन्निरजे गाः। सुगमान्पथोऽकरोन्निर्गमनाय गवाम्। प्रावन्वाणीः पुरुहूतं धमन्तीः। आपो वा वहनाद्वाचो वा वदनाद्बहुभिराहूतमुदकं भवति। धमतिर्गतिकर्मा। SRV. III. 30. 10. p. ii. 221.

6. 2:–धमतिर्गतिकर्मेति। SRV. I. 33. 9; 51. 5; iv. 50. 4. pp. i. 117, 255; ii. 475.

6. 3:–उक्तमर्थं यास्कोऽब्रवीत्। उद्धर रक्षः सहमूलमिन्द्र। मूलं मोचनाद्वा मोषणाद्वा मोहनाद्वा। वृश्च मध्यं प्रति श्रृणीह्यग्रम्। अग्रमागतं भवति। आ कियतो देशात्सललूकं संल्लुब्धं भवति पापकमिति नैरुक्ताः सररूकं वा स्यात्सर्तेरभ्यस्तात्। तपुषिस्तपतेर्हेतिर्हन्तेः। SRV. III. 30. 17. p. ii. 224.

6. 3:–तथा च यास्कः। अस्कृधोयुरकृध्वायुः। कृध्विति ह्रस्वनाम निकृत्तं भवति। SRV. VI. 67. 11. p. ii. 874.

6. 4:–तथा च यास्कः। बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थम्। SRV. VIII. 32. 10. p. iii. 388.

6. 4:–ऋदूदरो मृदूदर इति यास्कः। SRV. II. 33. 5. p. ii. 98.

6. 4:–भाऋजीकः प्रसिद्धभाः। SRV. I. 44. 3. p. i. 224.

6. 4:–रुजाना नद्यो भवन्ति रुजन्ति कूलानि। SRV. I. 32. 6. p. i. 168.

6. 4:–जूर्णिर्जवतेर्वा। इति यास्केनोक्तत्वात्। SRV. VI. 63. 4. p. ii. 863.

6. 4:–जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वेति यास्कः। SRV. I. 129. 8. p. i. 587.

6. 5:–अत्र निरुक्तम्। उपलप्रक्षिणीत्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा। कारुरहमस्मि कर्ता स्तोमानां ततो भिषक् तत

इति संताननाम पितुर्वा पुत्रस्य वा। उपलप्रक्षिणी सक्तुकारिका नना नमते-र्माता वा दुहिता वा। नानाधियो नाना-कर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम्। SRV. IX. 113. 3. p. iii. 829.

6. 6:—अभ्यर्धयज्वाभ्यर्धयन्यजति। इति यास्कः। SRV. VI. 50. 5. p. ii. 829.

6. 6:—तदुक्तं यास्केन। क्षोणस्य क्षयणस्य। SRV. I. 117. 8. p. i. 525.

6. 7:—पाथोऽन्तरिक्षं पथा व्याख्यातम्। SRV. I. 113. 8; 154. 5. pp. i. 499, 663.

6. 7:—तथा च यास्कः। सवीमनि प्रसवे। SRV. IV. 72. 2. p. ii. 882.

6. 7:—तथाह यास्कः। सप्रथाः सर्वतः पृथुः। SRV. V. 13. 4; VI. 68. 9. pp. ii. 529, 876.

6. 8:—तथा च यास्कः। समाश्रिताः सूर्य-मुपतिष्ठन्ते। अपि वोपमार्थे स्यात्। सूर्य-मिवेन्द्रमुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभक्षमाणाः। स यथा धनानि विभजति जाते च जनिष्यमाणे च तं वयं भागमनुध्यायाम। SRV. VIII. 99. 3. p. iii. 585.

6. 8:—जीगर्तिर्गिरतिकर्मा वा। इति यास्कः। SRV. VI. 65. 1. p. ii. 867.

6. 8:—जिगर्तिर्गृह्णातिकर्मेति ह्युक्तम्। SRV. X. 29. 1. p. iv. 85.

6. 8:—मूरा अमूरेत्यत्र यास्क एवं व्याचख्यौ। मूढा वयं स्मोऽमूढस्त्वमसि। SRV. I. 68. 8. p. i. 329.

6. 8:—शशमानः शंसमान इति यास्कः। SRV. I. 141. 10; III. 18. 4; IV. 31. 8. pp. i. 633; ii. 185, 435.

6. 8:—देवान्प्रत्यक्तया कृपेति यास्कः। SRV. I. 127. 1. p. i. 573.

6. 9:—अत्र निरुक्तम्। अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः। विजा-मातेति शश्वद्दाक्षिणाजाः क्रीतापतिमा-चक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा अपत्यं तन्निर्माता। उत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः। स्याल्लाजानावप-तीति वा। लाजा लाजतेः स्यं शूर्पं स्यतेः। शूर्पमशनपवनं शृणातेः शम्ना-तेर्वा। अथ सोमस्य प्रदानेन युवाभ्या-मिन्द्राग्नी स्तोमं जनयामि नव्यं नवतरम्। SRV. I. 109. 2. p. i. 477.

6. 10:—कक्षीवान् कक्ष्यावान्। SRV. I. 51. 13. p. i. 260.

6. 10:—सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः। कक्षीवान्कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कान्तिकर्मणोऽपि त्वयं मनुष्य-कक्ष एवाभिप्रेतः स्यात्तं सोमानं सोतारं मा प्रकाशनवन्तं कुरु ब्रह्मणस्पते। SRV. I. 18. 1. p. i. 103.

6. 11:—तथा च यास्कः। किमीदिने किमि-दानीमिति चरते किमिदं किमिदमिति वा। SRV. X. 87. 24. p. iv. 277.

6. 12:—तथा च यास्कः प्रसितिः प्रसयनात्त-न्तुर्वा जालं वा। SRV. X. 87. 15. p. iv. 275.

6. 12:—अत्र निरुक्तम्। कुरुष्व पाजः। पाजः पालनात्। प्रसितिमिव पृथ्वीम्। प्रसितिः प्रसहनात्तन्तुर्वा जालं वा। याहि राजे-

वामात्यवानभ्यमनवान्स्ववान्वेरावता गणेन गतभयेन हस्तिनेति वा । तृष्ण्यानु प्रसित्या दूणानः । तृष्वीति चिप्रनाम तरतेर्वा त्वरतेर्वा । अस्तासि विध्य रक्षसस्तपिष्ठैस्तप्ततमैस्तपिष्ठतमैरिति वा । SRV. VI. 4. 1. p. ii. 359.

6. 12:–तथा च यास्कः । श्रुष्टीति चिप्रनामाशु अष्टीति । SRV. I. 67. 2; IV. 68. 2. pp. i. 326.; ii. 874.

6. 13:–उक्तं च भगवता यास्केन । सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । नासिकाप्रभवौ बभूवतुरिति वा । SRV. VIII. 5. 23. p. iii. 260.

6. 13:–सत्यावेव नासत्यावित्यौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । SRV. I. 3. 3. p. i. 36.

6. 13:–सत्यावेव नासत्यावित्यौर्णवाभः । SRV. I. 34. 7. p. i. 183.

6. 13:–तथा च यास्कः । सत्यावेव नासत्यावित्यौर्णवाभः सत्यस्य प्रणेतारौ । SRV. VIII. 42. 4. p. iii. 519.

6. 13:–पुरंधिर्बहुधीरिति यास्कः । SRV. I. 5. 3; 116. 7; 134. 3; VII. 9. 6. pp. i. 46, 515, 605; iii. 24.

6. 14:–सुदत्रः कल्याणदान इति निरुक्तम् । SRV. I. 164. 49; VII. 8. 3. pp. i. 719; iii. 22.

6. 14:–यदाह यास्कः । आनुषगिति नामानुपूर्व्यस्य । SRV. VIII. 12. 11. p. iii. 297.

6. 14:–तुर्वणिस्तूर्णवनिः । SRV. I. 56. 3; 61. 11; 128. 3; 168. 1; pp. i. 283, 301, 580, 734.

6. 14:–गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति । इति यास्कः । SRV. I. 5. 7; 11. 6; 45. 2; 62. 1; III. 40. 6. pp. i. 47, 77, 229, 304; ii. 271.

6. 16:–जज्झतीरापो भवन्ति शब्दकारिण्यः । इति निरुक्तम् । SRV. V. 52. 6. p. ii. 613.

6. 16:–अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा । SRV. I. 7. 6. p. i. 56.

6. 16:–शाशदानः शाशाद्यमान इति यास्कः। SRV. I. 123. 10; 124. 6. pp. i. 560, 564.

6. 17:–करस्नौ बाहू कर्मणां प्रस्नातारौ । इति यास्कः । SRV. III. 18. 5; VIII. 32. 10. pp. ii. 186; iii. 388.

6. 17:–शिप्रे हनू नासिके वा । इति यास्कः । SRV. I. 9. 3; 29. 2; III. 30. 3. pp. i. 65, 150; ii. 218.

6. 17:–तथा च यास्कः । द्विबर्हा द्वयोः स्थानयोः परिवृढः । SRV. VII. 8. 6. p. iii. 23.

6. 17:–उराण उरु कुर्वाणः । इति यास्कः । SRV. III. 19. 2; IX. 109. 9. pp. ii. 187; iii. 822.

6. 17:–स्तिया आपो भवन्ति स्त्यायनादिति यास्कवचनात् । SRV. VII. 5. 2. p. iii. 16.

6. 17:–जबारु जरमाणरोहीति वा जवमानरोहीति वेति यास्कः । SRV. IV. 5. 7. p. ii. 367.

6. 18:–तुञ्जस्तुञ्जतेर्दानकर्मणः । दाने दाने

6. 19:—इलाबिलशयस्य । SRV. I. 33. 12. p. i. 178.

6. 20:—अत्र निरुक्तम् । कियेधाः कियद्धा इति वा क्रममाणधा इति वेति । SRV. I. 61. 6. p. i. 299.

6. 20:—अत्र निरुक्तम् । अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्येष्यन्नर्णांस्यपां नरणाय । SRV. I. 61. 12. p. i. 302.

6. 21:—ऋञ्जतिः प्रसाधनकर्मेति यास्कः । SRV. I. 6. 9; 37. 3; 54. 2; IV. 21. 5. pp. i. 53, 200, 273; ii. 411.

6. 22:—चोष्कूयमाण इन्द्र भूरि वामं ददिन्द्र बहु वननीयम् । SRV. VIII. 7. 41. p. iii. 270.

6. 22:—तेनाधिषवणचर्मणा ऊधसोऽधस्तादवस्थितेनेति मन्यमानो निरुक्तकारो ब्रवीति याज्ञे शकट इति वा । SRV. X. 30. 11. p. iv. 90.

6. 22:—उक्तं च यास्केन । सुमत् स्वयमित्यर्थः । SRV. I. 100. 16; 156. 2; 162. 7. pp. i. 444, 667, 685.

6. 23—अमत्रो अमात्रो महान्भवत्यभ्यमितो वेति यास्कः । SRV. I. 61. 9. p. i. 300.

6. 23:- ऋचीषम ऋचा समः । इति यास्कः । SRV. I. 61. 1. p. i. 296.

6. 23:—तथा च यास्कः । अनर्शरातिमनश्लीलदानमश्लीलं पापकम् । SRV. VIII. 99. 4. p. iii. 586.

6. 23:—अत्रानर्वाणमप्रत्यृतमन्यास्मिन्नित्यादि निरुक्तं द्रष्टव्यम् । SRV. I. 190. 1. p. i. 787.

6. 23:—तथाह यास्कः । मन्द्रजिह्वं मन्दनजिह्वं मोदनजिह्वमिति वा । SRV. V. 25. 2. p. ii. 541.

6. 23:—असामि सामिप्रतिषिद्धं सामि स्यतेः । असाम्योजो बिभृथा सुदानवः । असुसमाप्तं बलं बिभृथ कल्याणदानाः । SRV. I. 39. 10. p. i. 211.

6. 25:—अत्र न पापा मन्यामहे । इत्यादि निरुक्तं द्रष्टव्यम् । SRV. VIII. 61. 17. p. iii. 474.

6. 26:—वृको लाङ्गलं भवति विकर्तनात् । इति यास्कः । SRV. VIII. 22. 6. p. iii. 344.

6. 27:—स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां सुरापानं दुष्कृतकर्मणः पुनः पुनः सेवां पातकेऽनृतोद्यम् । इति निरुक्ते निर्दिष्टाः सप्त मर्यादाः । SRV. X. 5. 6. p. iv. 11.

6. 29:—असंक्रामसंक्रमणीम् । इति यास्केनोक्तत्वात् । SRV. VI. 63. 8. p. ii. 864.

6. 29:—अनवब्रवोऽनवक्षिप्तवचन इति यास्कः । SRV. X. 84. 5. p. iv. 252.

6. 31:—वामं वननीयं भवतीत्यादि निरुक्तम् । SRV. IV. 30. 24; VI. 71. 4; VII. 18. 1; pp. ii. 434, 883; iii. 36.

6. 31:—यास्कस्त्वेवं व्याख्यात् । दनो दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु । SRV. I. 174. 2. p. i. 748.

6. 31:—अथापि तद्वदर्थे भाष्यते । इति यास्कोक्तमनुसृत्य तद्वद्युक्त इत्युक्तम् । SRV. VIII. 92. 30. p. iii. 557.

6. 31:—इदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते । वसूयुरिन्द्रो वसुमानित्यर्थः । अश्वयुर्गव्यू रथयुर्वसूयुरित्यपि निगमो भव-

ति। SRV. I. 51. 14. p. i. 260.

6. 32:—एतमर्थं यास्कोऽप्याह। किं ते कुर्वन्ति कीकटेषु गावः। कीकटो नाम देशोऽनार्यनिवासः। कीकटाः किंकृताः किं क्रियाभिरिति प्रेप्सा वा। नैव चाशिरं दुह्रे न तपन्ति घर्मं घरणम्। आ हर नः प्रमगन्दस्य धनानि। मगन्दः कुसीदी माङ्गदो मामागमिष्यतीति च ददाति। तदपत्यं प्रमगन्दोऽत्यन्तकुसीदिकुलीनः। प्रमदको वा योऽयमेवास्ति लोको न पर इति प्रेप्सुः। पण्डको वा पण्डकःपण्डगःप्रार्दको वा प्रार्दयत्याण्डौ। आण्डावाणी इव व्रीडयति। तत्स्थं नैचाशाखम्। नीचाशाखो नीचैःशाखः। शाखाः शक्नोतेः। आणिररणात्। तन्नो मघवन्नन्धयेति रध्यतिर्वशगमने। SRV. III. 53. 14. p. ii. 302.

6. 32:—रध्यतिर्वशगमन इति यास्कः। SRV. I. 51. 8; 53. 10; II. 32. 2; VI. 43. 1; X. 128. 5. pp. i. 257, 272; ii. 94, 790; iv. 421.

6. 32:—तथा च यास्कः। बुन्द इषुर्भवति। SRV. VIII. 45. 4. p. iii. 430.

6. 33:—एषा निरुक्त एकमपि पदं विहाय यास्केन व्याख्याता। तदेव लिख्यते। तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्ययः। उभौ ते बाहू रण्यौ सांग्राम्यौ वर्दूपे अर्दनपातिनौ गमनपातिनौ मर्मण्यर्दनवेधिनौ गमनवेधिनौ वा। SRV. VIII. 77. 11. p. iii. 525.

6. 36:—अयं पक्षो यास्केन हिमेनोदकेनेत्यादिनोक्तः। SRV. I. 116. 8. p. i. 516.

7. 1:—तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। SRV. I. 6. 9. p. i. 53.

7. 3:—यास्कोऽपीमं परिदेवनार्थत्वेनोदाजहार। अथापि परिदेवना कस्माच्चिद्भावात् न वि जानामि यदि वेदमस्मि। SRV. I. 164. 37. p. i. 713.

7. 12:-मन्त्रा मननाच्छन्दांसि छादनात्स्तोमः स्तवनाद्यजुर्यजतेः। SRV. p. i. 2.

7. 14:—अग्निः कस्मादग्रणीर्भवतीति निरुक्तम्। SRV. I. 188. 9. p. i. 784.

7. 14:—अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः। तस्यैषा भवत्यग्निमीळे। SRV. I. 1. 1. p. i. 14.

7. 15:—अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमम्। SRV. I. 1. 1. p. i. 24.

7. 15:—जुहोतेर्होतेत्यौर्णवाभ इति यास्कः। SRV. I. 127. 1. p. i. 573.

7. 17:—हर्यतिः प्रेप्साकर्मा। SRV. I. 57. 2; 63. 2. p. i. 285, 311.

7. 18:—अयं मन्त्रो निरुक्त एवं व्याख्यातः। इममेवाग्निं महान्तमात्मानमेकमात्मानं ब-

हुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा। SRV. I. 164. 46. p. i. 718.

7. 19:–जातवेदाः कस्मात् । जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यते इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम्। तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पन्तीति च। SRV. I. 44. 1. p. i. 223.

7. 19:–जातवेदसं जातानां वेदितारं जातप्रज्ञं जातबलं वा। जातवेदःशब्दो यास्केन बहुधा निरुक्तः। SRV. I. 127. 1. p. i. 573.

7. 21:–वैश्वानरशब्दो यास्केन व्याख्यातः। वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा । अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति । SRV. III. 2. 1. p. ii. 133.

7. 21:–एतत्सर्वं यास्केन वैश्वानरः कस्मादित्यादिना बहुधा प्रपञ्चितम्। SRV. I. 60. 6. p. i. 293.

7. 21:–तथा च यास्कः। वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा। SRV. VII. 5. 4. p. iii. 16.

7. 23:–सचन्ते सेवन्ते । इति यास्कः । SRV. III. 13. 2. p. ii. 171.

7. 23:–अत्र निरुक्तम् । प्रब्रवीमि तन्महित्वं महाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यन्त्यास्मिन्रसा उपदासयति कर्माणि तमग्निर्वैश्वानरो घ्नन्नवाधूनोदपः काष्ठा अभिनच्छम्बरं मेघम्। SRV. I. 60. 6. p. i. 293.

7. 23:–अयमेवाग्निर्वैश्वानर इति शाकपूणिः। इति यास्कः। SRV. V. 52. 13. p. ii. 611.

7. 23:–तथा च यास्कः। अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत्। SRV. I. 98. 1. p. i. 437.

7. 23:–अग्निर्विद्युदादित्यास्त्रयोऽपि मतभेदेन वैश्वानरशब्दाभिधेया इति यास्केनोक्तत्वात्। SRV. IV. 5. 7. p. ii. 366.

7. 24:–कृष्णं नियानं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मय इत्यादि निरुक्तं द्रष्टव्यम् । SRV. I. 164. 47. p. i. 718.

7. 25:–तथा च यास्कः। हविर्यत्पानीयमजरं सूर्यविदि दिविस्पृश्यभिहुतं जुष्टमग्नौ तस्य भरणाय च भावनाय च धारणाय चैतेभ्यः सर्वेभ्यः कर्मभ्यो देवा इममग्निमन्नेनापप्रथन्त। SRV. X. 88. 1. p. iv. 278.

7. 26:–तथाह यास्कः। मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वा । SRV. III. 6. 9. p. ii. 145.

7. 27:–मूर्तमस्मिन्धीयत इति मूर्धा । SRV. I. 59. 2. p. i. 291.

7. 27:–तथा च यास्कः । मूर्धा मूर्तमस्मिन्धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्स एव प्रज्ञां त्वेतां मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनामपो यत्कर्म चरति प्रजानन्त्सर्वाणि स्थानान्यनुसंचरति त्वरमाणः।

SRV. X. 88. 6. p. iv. 279.

7. 28:—अत्र यास्कः। स्तोमेन यं हि दिवि देवासोऽग्निमजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणं तमकुर्वंस्त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। यदस्य दिवि तृतीयं तदसावादित्य इति हि ब्राह्मणम्। SRV. X. 88. 10. p. iv. 280.

7. 29:—नयतिः परो वनिर्वा समाश्रितावन्योन्यं नयतो वनुतो वा। मनुष्यमिथुनावप्येतस्मादेव मेथन्तावन्योन्यं वनुत इति वा। SRV. X. 88. 11. p. iv. 281.

7. 29:—अत्र यास्कः। यदेनमदधुर्यज्ञियाः सर्वे दिवि देवाः सूर्यमदितेः पुत्रं यदा चरिष्णू मिथुनौ प्रादुरभूतां सर्वदा सहचारिणावुषाश्चादित्यश्च। मिथुनौ कस्मान्मिनोतिः श्रयतिकर्मा थु इति नामकरणस्थकारो वा। SRV. X. 88. 11. p. iv. 281.

7. 30:—तथा च यास्कः। यत्र विवदेते दैव्यौ होतारावयं चाग्निरसौ च मध्यमः कतरो नौ यज्ञे भूयो वेदेत्याशक्नुवन्ति तत् सहमदनं समानख्याना ऋत्विजस्तेषां यज्ञं समश्नुवानानां को न इदं विवक्ष्यति। SRV. X. 88. 17. p. iv. 282.

7. 31:—तथा च यास्कः। यावन्मात्रमुषसः प्रत्यक्तं भवति प्रतिदर्शनमिति वास्त्युपमानस्य संप्रत्यर्थे प्रयोग इहेव निधेहीति यथा सुपर्ण्यः सुपतना एता रात्र्यो वसते मातरिश्वञ्ज्योतिर्वर्णस्य तावदुपदधाति यज्ञमागच्छन्ब्राह्मणो होतास्याग्नेर्होतुरवरो निषीदन् होतृजपस्त्वनाग्निर्वैश्वानरीयो भवति। SRV. X. 88. 19. p. iv. 283.

7. 31:—तदुक्तं यास्केन। अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः। SRV. I. 88. 6; VI. 4. 3. pp. i. 394; ii. 697.

7. 31:—अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इहेव निधेहि। SRV. I. 57. 3. p. i. 285.

8. 1:—द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवन्ति बलं वा द्रविणं यदनेनाभिद्रवन्ति तस्य दाता द्रविणोदास्तस्यैष भवति। द्रविणोदा द्रविणस इत्यादि। SRV. I. 15. 7. p. i. 94.

8. 2:—तथा द्राविणोदसाः प्रवादा भवन्ति। SRV. I. 15. 7. p. i. 95.

8. 2:—ऋत्विजोऽत्र द्रविणोदस उच्यन्ते हविषो दातारस्ते चैनं जनयन्ति। SRV. II. 37. 4. p. ii. 113.

8. 5–21:—इदं सूक्तं यास्केन सम्यगभ्यधायि। तदत्रानुसंधीयताम्। SRV. X. 110. 11. p. iv. 370.

8. 6:—नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति। SRV. I. 18. 9. p. i. 106.

8. 6:—तथा च यास्कः। नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति। तस्यैषा भवति। नराशंसस्य महिमानमेषामुपस्तोषाम यजतस्य यज्ञैर्ये सुकर्माणः शुचयो धियं धारयितारः स्वदयन्तु देवा उभयानि हवींषि सोमं चेतराणि च। SRV. VII. 2. 1. p. iii. 8.

8. 9:—तथा च यास्कः। द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा। SRV. VII. 17. 2. p. iii. 35.

8. 11:—पेश इति रूपनामेति। SRV. I.

49. 2. p. i. 247.

8. 13:—त्वष्टृशब्दो यास्केनैवं व्याख्यातः । त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोति-कर्मणः । SRV.I.142.11.p.i.637.

8. 13:—भरत आदित्यः । SRV. I. 22. 10. p. i. 117.

8. 15:—यास्कस्त्वाह । आविरावेदनात्तस्यो वर्धते चारुरासु चारु चरतेर्जिह्मं जिहीते-रूर्ध्वे उच्छ्रितो भवति स्वयशा आत्मयशा उपस्थ उपस्थाने उभे त्वष्टुर्बिभ्यतुर्जायमा-नात्प्रतीची सिंहं प्रति जोषयेते द्यावापृथि-व्याविति वाहोरात्रे इति वारणी इति वापि चैते प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते । SRV. I. 95. 5. p. i. 429.

8. 15:—यास्केनारणी बिभ्यतुरित्युक्तत्वात् । SRV. I. 162. 3. p. i. 684.

8. 18:—तथा च निरुक्तमपि । अञ्जन्ति त्वा-मध्वरे देवान्कामयमाना वनस्पते मधुना दैव्येन च घृतेन च यदूर्ध्वः स्थास्यसि द्रविणानि च नो दास्यसि यद्वा ते कृतः क्षयो मातुरस्या उपस्थ उपस्थाने । SRV. III. 8. 1. p. ii. 155.

8. 21:—निरुक्ते किंदेवताः प्रयाजानुयाजा इति च्छन्दोदेवता इत्यादि पक्षान्तरं बहुधा प्रदर्श्य तदर्थे ब्राह्मणानि चोदाहृत्य इतरे पक्षा अर्थवादा आग्नेया एवेति सिद्धान्ति-तम् । अथ किंदेवताः प्रयाजानुयाजा इत्या-दिना । SRV. I.142. 1.p.i.634.

8. 22:—समिद्धाग्नितनूनपादादय एकादश प्रत्यृचं देवता यास्केन किंदेवताः प्रयाजा इत्युपक्रम्याग्नेयाः प्रयाजा ऋतुदेवता-श्छन्दोदेवताः पशुदेवताः प्राणदेवता आत्मदेवता इत्यादिना बहून्पक्षानुपन्यस्य ब्राह्मणानि च प्रदर्श्याग्नेया एवेति सिद्धा-न्तितम् । SRV.I.188.1.p.i.782.

9. 4:—न्यक्रन्दीज्जन्म प्रब्रुवाणो यथास्य शब्द-स्तथा नामेरयति वाचमीरयितेव नावं सु-मङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वेति यास्कः । SRV.II. 42.1.p.ii.125.

9. 5:—तथा च यास्कः । गृत्स इति मेधा-विनाम । SRV.VII. 4.2.p.iii.13.

9. 5:—अत्र यास्कः । गृत्समदो गृत्समदनो गृत्स इति मेधाविनाम गृणातेः स्तुति-कर्मणः । SRV.II. 20.8.p.ii. 57.

9. 5:—मण्डूका मज्जूका मज्जनान्मदतेर्वा मोद-तिकर्मणो मन्दतेर्वा तृप्तिकर्मणो मण्डय-तेरिति वैयाकरणा मण्ड एषामोक इति वा मण्डो मदेर्वा मुदेर्वा तेषामेषा भवति। SRV. VII. 103.1.p. iii. 211.

9. 6:—अत्र निरुक्तम् । वसिष्ठो वर्षकामः पर्ज-न्यं तुष्टाव तं मण्डूका अन्वमोदन्त स मण्डूकाननुमोदमानान् दृष्ट्वा तुष्टाव । SRV. VII. 103. 1. p.iii. 211.

9. 8:—जागृविर्जागरणात् । इति यास्कः । SRV. III. 24. 3. p. ii. 198.

9. 8:—तथा च यास्कः । प्रवेपिणो मा महतो विभीदकस्य फलानि मादयन्ति प्रवातेजाः प्रवणेजा इरिणे वर्तमाना इरिणं निर्ऋण-मृणातेरपार्णं भवत्यपरता अस्मादोषधय इति वा सोमस्येव मौजवतस्य भक्षो मौजवतो मूजवति जातः । SRV. X. 34. 1. p. iv. 101.

9. 8:—मूजवान्पर्वतो मुञ्जवान्मुञ्जो विमुच्यत इषीकयेषीकेषतेर्गतिकर्मण इयमपीतरेषी-

कैतस्मादेव विभीदको विभेदनाज्जागृविर्जागरणान्मह्यमचच्छदत् । SRV. X. 34. 1. p. iv. 101.

9. 12:—अत्र निरुक्तम् । दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याद्वधकर्मणः । SRV. VI. 47. 29. p. ii. 815.

9. 13:—तथा च यास्कः । इषुधिरिषूणां निधानम् । SRV. VI. 75. 5. p. ii. 888.

9. 15:—तथा च यास्कः । अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान्पुरुमना भवति पुंसतेर्वा । SRV. VI. 75. 14. p. ii. 891.

9. 15:—तथा च यास्कः । पुमान् पुरुमना भवति पुंसतेर्वा । SRV. VII. 6. 1. p. iii. 18.

9. 16:—तथा च यास्कः । रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयत मनः पश्चात्सतोऽनुयच्छन्ति रश्मयः । SRV. VI. 75. 6. p. ii. 889.

9. 17:—तथा च यास्कः । समदः समदो वात्तेः संमदो वा मदतेः । SRV. VI. 75. 2. p. ii. 888.

9. 18:—तथा च यास्कः । वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्ती । SRV. VI. 75. 3. p. ii. 888.

9. 19:—तथा च यास्कः । सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातम् । यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म शरणं प्रयच्छन्तु । SRV. VI. 75. 11. p. ii. 890.

9. 20:—जघनं जङ्घन्यतेरिति । SRV. I. 28. 2. p. i. 147.

9. 20:—तथा च यास्कः । आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नन्ति । जघनं जङ्घन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय । SRV. VI. 75. 13. p. ii. 891.

9. 20:—उलूखलमुरुकरं वोर्ध्वखं वोर्कीरं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम् । SRV. I. 28. 5. p. i. 148.

9. 23:—भुर्वतिरत्तिकर्मा । SRV. I. 56. 1; 143. 5; pp. i. 282, 640.

9. 23:—प्रधनमिति संग्रामनाम । प्रकीर्णान्यस्मिन्धनानि भवन्ति । SRV. I. 52. 9. p. i. 265.

9. 23:—तथा निरुक्तेऽपीयं कथा सूचिता । मुद्गलो भार्म्यश्व ऋषिर्वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्याजिं जिगाय । SRV. X. 102. 1. p. iv. 338.

9. 26:—अत्र गङ्गा गमनादित्यादि निरुक्तं द्रष्टव्यम् । SRV. X. 75. 5. p. iv. 232.

9. 26:—सिन्धुः स्यन्दनादिति यास्कः । SRV. I. 125. 4. p. i. 569.

9. 28:—अत्र निरुक्तं च । या ओषधयः पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामहं बभ्रुवर्णानां भरणानां हरणानामिति वा शतं धामानि

सप्त चेति । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति । जन्मान्यत्राभिप्रेतानि सप्त शतानि सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधति। SRV. X. 97. 1. p. iv. 319.

9. 30:–अत्र निरुक्तम् । अरण्यान्यरण्यस्य पत्न्यरण्यमपार्णं भवति ग्रामादरमणं भवतीति वा। अरण्यानीत्येनामामन्त्रयते। यासावरण्यानि वनानि पराचीव नश्यसि कथं ग्रामं न पृच्छसि न त्वा भीर्विन्दतीवेताव: परिभयार्थे वा । SRV. X. 147. 1. p. iv. 462.

9. 32:–ऋक्षरः कण्टक ऋच्छतेः । SRV. I. 41. 4. p. i. 215.

9. 32:–सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कण्टक ऋच्छतेः कण्टकः कंतपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म शरणं सर्वतः पृथु । SRV. I. 22. 15. p. i. 118.

9. 36:–आयजी आयष्टव्ये अन्नानां संभक्तृतमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुञ्जाने । SRV. I. 28. 7. p. i. 148.

9. 39:–अत्र निरुक्तम् । पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभमाने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते । SRV. III. 33. 1. p. ii. 242.

9. 40:–तथा च यास्कः । ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान् । SRV. VI. 75. 4. p. ii. 888.

9. 40:–शुनो वायुः शु एत्यन्तरिक्षे सीर आदित्यः सरणात् । इति यास्कः । SRV. IV. 57. 5. p. ii. 490.

10. 2:–वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब श्रृणु नो ह्वानम् । SRV. I. 2. 1. p. i. 30.

10. 3:–श्रव इत्यन्ननाम श्रूयत इति सतः । इति यास्कः । SRV. I. 11. 7; 49. 2; 91. 17. pp. i. 78, 247, 407.

10. 3:–श्रव इत्यन्ननाम श्रूयते । SRV. III. 11. 6. p. ii. 167.

10. 4:–अत्र नीचीनबारं वरुणः कबन्धमित्यादि निरुक्तं द्रष्टव्यम् । SRV. V. 85. 3. p. ii. 680.

10. 5:–तथा च यास्कः । तं स्वभिष्टौमि समानया गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैर्नाभाकस्य प्रशस्तिभिः । ऋषिर्नाभाको बभूव। यः स्यन्दमानानामासामपामुपोदये सप्तस्वसारमेनमाह वाग्भिः स मध्यम इति निरुच्यतेऽथैष एव भवति । नभन्तामन्यके समे मा भूवन्नन्यके सर्वे ये नो द्विषन्ति दुर्धियः पापधियः पापसंकल्पाः । SRV. VIII. 41. 2. p. iii. 416.

10. 5:–रुद्रो रौतीति सतः । इति यास्कः । SRV. I. 158. 1. p. i. 671.

10. 6:–तथा च यास्कः । तिग्मं तेजतेरुत्साहकर्मणः । SRV. VII. 18. 18. p. ii. 141.

10. 8:–जरा स्तुतिः । SRV. X. 59. 2. p. iv. 171.

10. 8:–जरा स्तुतिर्जरतेः स्तुतिकर्मणः ।

इति यास्कः। SRV. I. 123. 5. p. i. 558.

10. 8:—जरिता। ··· स्तुतिकर्मेति। SRV. I. 38. 5. p. i. 204.

10. 8:—जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम्। SRV. I. 27. 10. p. i. 145.

10. 8:—तथा च यास्कः। इन्द्र इरां दृणातीति वेरां दारयत इति वेरां धारयतीति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धत तदिन्द्रस्येन्द्रत्वमिति विज्ञायते। SRV. IX. 5. 7. p. iii. 609.

10. 8:—इन्द्र इरां दृणातीति इदंकरणादित्याग्रायण इति यास्केनोक्त ···· SRV. I. 156. 5. p. i. 668.

10. 8:—इन्द्रः शत्रूणां दारयितेति निरुक्तम्। SRV. X. 48. 6. p. iv. 146.

10. 8:—इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्द्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इन्छत्रूणां दारयिता वा द्रावयिता वा दरयिता च यज्वनाम्। SRV. I. 3. 4. p. i. 36.

10. 9:—अत्र निरुक्तम्। अदृणा उत्सम्। उत्स उत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा स्यात्। व्यसृजोऽस्य खानि त्वमर्णवानर्णस्वत एतानित्यादि। SRV. V. 32.1.p.i.559.

10. 10:—अत्र निरुक्तम्। यो जायमान एव प्रथमो मनस्वी देवो देवान्क्रतुना कर्मणा पर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदिति वा यस्य बलाद् द्यावापृथिव्यावप्यबिभीतां नृम्णस्य मन्हा बलस्य महत्त्वेन स जनास इन्द्र इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता। SRV. II. 12. 1. p. ii. 32.

10. 10:—पर्जन्यशब्दो यास्केन बहुधा निरुक्तः। पर्जन्यस्तृपेराद्यन्तविपरीतस्य तर्पयिता जन्यः परो जेता वा जनयिता वा प्रार्जयिता वा रसानाम्। SRV. V. 83. 1. p. ii. 676.

10. 11:—अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः। तदेवात्र लिख्यते। पर्जन्यो विहन्ति वृक्षान्विहन्ति च रक्षांसि सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् महान् ह्यस्य वधः। अप्यनपराधो भीतः पलायते वर्षकर्मवतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः पापकृतः। SRV. V. 83. 2. p. ii. 676.

10. 13:—यास्कस्त्वाह। अशनवन्तमास्यन्दनवन्तम्। SRV. II. 24. 4. p. ii. 71.

10. 15:—क्षेत्रस्य पतिनेत्यादि निरुक्तम्। SRV. IV. 57. 1. p. ii. 489.

10. 15:—मृळतिरुपदयाकर्मेति यास्कः। SRV. X. 64. 1. p. IV. 193.

10. 17: यद्यद्रूपं कामयन्ते तत्तद्देवा विशन्ति। इति यास्कः। SRV. VII. 56. 1. p. iii. 114.

10. 21:—अत्र निरुक्तम्। सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीकेत्यादि। SRV. I. 66. 8. p. I.325.

10. 21:—यास्कस्त्वाह। तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति। SRV. I. 66.

8. p. i. 325.

10. 21:–अत्र यास्कः : तं वश्चराथा चरन्त्या पश्वाहुत्या वसत्या च निवसन्त्यौषधाहुत्यास्तं यथा गाव आप्नुवन्ति तथाप्नुयाम। SRV. I. 66. 10. p. i. 326.

10. 21:–प्रभीतिस्रागत इति निरुक्तम्। SRV. I. 156. i. p. i. 667.

10. 22:–उक्तार्थं यास्को ब्रवीति। मित्रो जनान्यातयति ब्रुवाणः शब्दं कुर्वन्। मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्नभिविपश्यतीति। कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दानकर्मा। SRV. III. 59. i. p. ii. 328.

10. 26:–अत्र विश्वकर्मा विभूतमना व्याप्तेत्यादि निरुक्तमनुसंधेयम्। SRV. X. 82. 2. p. IV. 247.

10. 26:–अत्र निरुक्तम्। विश्वकर्मा सर्वमेधे सर्वाणि भूतानि जुहवांचकार स आत्मानमप्यन्ततो जुहुवांचकार। तदभिवादिन्येषर्भवति य इमा विश्वा भुवनानि जुह्वदिति। SRV. V. 81.1. p. IV.244.

10. 27:–अत्र विश्वकर्मन्हविषा वर्धमान इत्यादि निरुक्तमनुसंधेयम्। SRV. V. 81. 6. p. IV. 246.

10. 28:–यदाह यास्कः। जूतिर्गतिः प्रीतिर्वा देवजूतं देवप्रीतं वा। SRV. X. 178. 1. p. IV. 503.

10. 29:–अत्र निरुक्तम्। सद्यो ऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि सहस्रसानिनी शतसानिन्यस्य सा गतिर्न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम्। SRV. X. 178. 3. p. IV. 504.

10. 29:–मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा। इति यास्कः। SRV. II. 24. 2; X. 83. 1; 87. 13. pp. ii. 70; IV. 249, 275.

10. 30:–अत्र त्वया मन्यो सरथमारुह्य रुजंत इत्यादि निरुक्तमनुसन्धेयम्। SRV. X. 84. 1. p. IV. 251.

10. 32:–अथ निरुक्तम्। सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे सविता द्याम-दृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्ते बद्धमतूर्णे इति वात्वरमाण इति वा सविता समुदितारम्। SRV. X. 149. 1. p. IV. 467.

10. 33:–अत्र निरुक्तम्। हिरण्यस्तूपो हिरण्मयस्तूपो हिरण्यमयः स्तूपो ऽस्येति वा। स्तूपः स्त्यायतेः संघातः। सवितर्यथा त्वाङ्गिरसो जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम्। SRV. X. 150. 5. p. IV. 468.

10. 36:–तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ। SRV. I. 19. 1. p. i. 107.

10. 38:–वेनतेः कान्तिकर्मणः इति यास्कः। SRV. IX. 73. 2; 97. 22; X. 64. 2. pp. iii. 717, 782; iv. 193.

10. 44:–तथा च यास्कः। बुध्नमन्तरिक्षं बद्धा अस्मिन्धृता आप इति वा। SRV. VII. 6. 7. p. iii. 19.

10. 44:–बुध्ने नदीनां रजःसूदकेषु सीदन् बुध्नमन्तरिक्षं बद्धा अस्मिन्धृता आप इति।

SRV. VII. 34. 16. p. iii. 80.

11. 5:–चन्द्रश्चन्दतेः कान्तिकर्मणः । इति यास्कः । SRV. VI. 65. 2. p. ii. 867.

11. 13-14:–अत्र निरुक्तम् । अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति । मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वेति । विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा । SRV. I. 88. 1. p. i. 392.

11. 15:–ऋभव उरु भान्तीति वर्तेन भान्तीति वर्तेन भवन्तीति । SRV. I. 20. 4. p. i. 110.

11. 16:–वोढारो मेधाविनो वेति यास्कः । SRV. III. 60. 4. p. ii. 332.

11. 16:–तदुक्तं यास्केन । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः । SRV. I. 110. 2. p. i. 480.

11. 16:–अत्र निरुक्तम् । कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः सन्तोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यन्त धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः SRV. I. 110. 4. p. i. 481.

11. 16:–तदुक्तं यास्केन । प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन । SRV. I. 111. 4. p. i. 485.

11. 16:–तथा च यास्को निरुक्ते आदित्यरश्मयोऽप्यृभव उच्यन्त इत्युक्त्वा···

SRV. I. 161. 11. p. i. 682.

11. 18:–तथा च यास्कः । सोम्याः सोमसंपादिनः । SRV. VI. 75. 10. p. ii. 890.

11. 19:–नवग्वा नवनीतगतय इति यास्को व्याचख्यौ । SRV. I. 62. 4. p. i. 306.

11. 21:–साक्षतिराप्नोतिकर्मेति यास्कः । SRV. X. 120. 8. p. IV. 399.

11. 23:–अत्र निरुक्तम् । दक्षस्य वादिते जन्मनि कर्मणि व्रते राजानौ । SRV. X. 64. 5. p. IV. 194.

11. 23:–यास्काचार्य इदमेव वाक्यमुदाहृत्य विरोधमाशंक्य पर्यहरत् । तथाहि । अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती । SRV. X. 72. 4. p. IV. 225.

11. 24:–सरमा सरणात् । इति यास्कः । SRV. I. 62. 3. p. i. 305.

11. 25:–अत्र किमिच्छन्ती सरमेदं प्रानडित्यादिकं निरुक्तं द्रष्टव्यम् । SRV. X. 108. 1. p. IV. 361.

11. 25:–पराचैः पराञ्चनैरिति निरुक्तम् । SRV. I. 63. 4. p. i. 312.

11. 25:–परितक्म्या रात्रिः परित एनां तकतीति यास्कः । SRV. I. 116. 15. p. i. 519.

11. 25:–रसा नदी भवति रसतेः शब्दकर्मण इति यास्कः । SRV. I. 112. 12. p. i. 490.

11. 25:–रसा नदी भवतीति निरुक्तम् । SRV. V. 53. 9. p. ii. 618.

11. 26:–पावका न सरस्वत्यन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः । SRV. I. 3. 10. p. i. 39.

11. 27:–महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति । SRV. I. 3. 12. p. i. 40.

11. 28:–तथा च यास्कः । यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मंद्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगमेति यत्पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा । SRV. VIII. 100. 10. p. iii. 589.

11. 29:–तथा च यास्कः । देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदनान्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता । SRV. VIII. 100. 11. p. iii. 590.

11. 40:–अयं मन्त्र आचार्येणैवं व्याख्यात. । गौरीर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावांतरदिग्भिश्च नवपदी दिग्भिश्चावांतरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने । SRV. I. 164. 41. p. i. 716.

11. 41:–अयमपि यास्केन व्याख्यातः । तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवन्ति । SRV. I. 164. 42. p. i. 716.

11. 44:–अयं मन्त्रो यास्केनैवं व्याख्यातः । सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती । SRV. I. 164. 40. p. i. 715.

11. 45:–पंथा अन्तरिक्षम् । SRV. X. 59. 7. p. iv. 172.

11. 49:–महद्दिवेति यास्कः । SRV. X. 64. 10. p. iv. 195.

11. 49:–प्रभृथस्य तेजसो वोदकस्येति निरुक्तम् । SRV. V. 41. 19. p. ii. 582.

12. 1:–तदुक्तं यास्केन । तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके । SRV. I. 92. 17; 112. 1. pp. i. 416, 486.

12. 1:–सूर्याचन्द्रमसावित्येके । इति निरुक्तम् । SRV. I. 181. 4; 184. 3; X. 106. 5. pp. i. 764, 771; iv. 354.

12. 1:–तथा च यास्कः । अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषामन्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येके ऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः । SRV. I. 89. 3. p. i. 396.

12. 3:–अत्र निरुक्तम् । इहेह जातौ संस्तूयेथे पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र उह्यत आदित्यः । SRV. I. 181. 4. p. i. 764.

12. 6:–अत्र निरुक्तम् । उपस्तचित्रं चायनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि । SRV. I. 92. 13.

p. i. 415.

12. 7:—निरित्येष समित्येतस्य स्थाने । इति यास्कः । SRV. I. 2. 6; iii. 58. 9. pp. i. 32; ii. 328.

12. 7:—अत्र निरुक्तम् । एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने । एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रति यन्ति गावो गमनादरुषी- रारोचनान्मातरो भासो निर्मात्र्यः । SRV. I. 92. 1. p. i. 410.

12. 8:—अत्र निरुक्तं द्रष्टव्यम् । SRV. X. 85. 20. p. iv. 258.

12. 9:—तथा च यास्कः । वृषाकपायि रेवति सुपुत्रे मध्यमेन सुस्नुषे माध्यमिकया वाचा । स्नुषा साधुसादिनीति वा साधु- सानिनीति वा । प्रियं कुरुष्व सुखाचय- करं हविः सर्वस्माद्य इन्द्र उत्तर । SRV. X. 86. 13. p. iv. 269.

12. 15:—उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्श- नाय सूर्यम् । SRV. I. 50. 1. p. i. 248.

12. 19:—विष्णुर्विशते र्वा व्यश्नोतेर्वा । य- दिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशि- रसीत्यौर्णवाभः समूळ्हमस्य पांसुरेऽप्या- यनेऽन्तरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् पांसुर इव पदं न दृश्यत इति पांसवः सूयंत इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वा । SRV. I. 22. 17. p. i. 120.

12. 22:—तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि । SRV. I. 50. 6. p. i. 250.

12. 27:—अयमपि मन्त्रो यास्केनैवं व्याख्या- तः । त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेको- ऽभिपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य । SRV. I. 164. 44. p. i. 716.

12. 28:—तथा च यास्कः । सुप्रसूतानि वः कर्माणि कल्पयावहै य एष स्वप्ननंशनः स्वप्ना- नाशयस्यादित्य उदयेन सोऽस्तमेषि पथा पुनः । SRV. X. 86. 21. p. iv. 271.

12. 30:—पविः शल्यो भवति यद्विपुनाति कायमित्यादि निरुक्तमनुसंधेयम् । SRV. X. 65. 13. p. iv. 201.

12. 39:—तथा च यास्को व्याचख्यौ । देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय । SRV. I. 89. 2. p. i. 395.

12. 40:—अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्व- लिङ्गमिति शाकपूणिः । SRV. I. 3. 7. p. i. 38.

12. 41:—अग्निनाग्निमयजन्त देवा इत्यादि निरुक्तमनुसंधेयम् । SRV. I. 164. 50. p. i. 719.

12. 46:—अत्रापि च ग्ना व्यन्तु देवपत्न्यः ।

इत्यादि निरुक्तं द्रष्टव्यम् । SRV. V. 46. 8. p. ii. 602.

13. 3:-अत्र यास्कः । यदुदञ्चो वृषाकपे गृहमिन्द्राजगमत क स्य पुल्वघो मृगः क स बह्वादी मृगः । मृगो मार्ष्टेर्गतिकर्मणः । कमगमद्देशं जनयोपनः ; SRV. X. 86. 22. p iv. 271.

13. 5:-अत्र निरुक्तं द्विविधा सृणिर्भवति भर्ता च हन्ता च तथाश्विनौ चापि भर्तारौ जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यादि । SRV.X.106.6.p.iv.354.

13. 5:-जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हन्तारावित्यर्थः । SIRV. p. i. 5.

13. 6:-अस्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः । तद्यथा । तरति सपापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिम् । धारा सुतस्यांधसो धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य । SRV. IX. 59. 1. p. iii. 664.

13. 7:-अत्र यास्कश्चत्वारि शृङ्गेति वेदा वा एत उक्ता इत्यादिना निरवोचत् । तदत्रानुसंधेयम् । SRV.iv.58.3.p.ii.492.

13. 9:-अयं मन्त्रो निरुक्ते व्याख्यातः । सोऽत्राप्यनुसंधेयः । SRV. I. 164. 45. p. i. 717.

13. 10:-( ऋचो अक्षरे परमे etc. ) अयं मन्त्रो निरुक्ते व्याख्यातः । SRV. I. 164. 39. p. i. 714.

13. 13:-हृदा तष्टेषु मनसां प्रजवेष्वित्यादिकं निरुक्तं द्रष्टव्यम् । SRV. X. 71. 8. p. iv. 222.

13. 42=14. 29:-अत्र द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारावित्यादि निरुक्ते गतमस्य मंत्रस्य व्याख्यानमनुसंधेयम् । SRV. I. 164. 20. p. i. 704.

# निघण्टुटीकायां देवराजयज्वोद्धृतनिरुक्तसंदर्भाः ।

# PASSAGES OF THE NIRUKTA, QUOTED BY DEVARĀJA YAJVAN IN HIS COMMENTARY ON THE NIGHAṆṬU.

*Note:—Reference is to the Bib. Ind. ed. of the Nirukta, vol. I.*

# देवराजयज्वोद्धृतनिरुक्तसंदर्भाः ।

Ngh. 2. 7:–वाज इत्यन्ननाम । Ngh. 1. 8. p. 51.

Ngh. 2. 15:–आशुरिति क्षिप्रनाम । Ngh. 1. 14. p. 149.

Ngh. 3. 7:–अर्जुनमिति रूपनाम । Ngh. 1. 8. p. 50.

N. 1. 1:–भावप्रधानमाख्यातम् । p.387.

1. 3:–आ इत्यर्वागर्थे । Ngh. 4.2.p. 411.

1. 4:–चिदित्येषोऽनेककर्मा । Ngh. 4. 2. p. 411.

मंहतिर्दानकर्मा । Ngh. 1. 8. p. 50. Cf. N. 1. 7:–मंहतेर्दानकर्मणः ।

1. 7:–वीरवन्तः कल्याणवीरा वा । Ngh. 1. 5. p. 39.

1. 8:–ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः। Ngh 1. 3. p. 31.

1. 10:–शिशिरं शृणातेः शम्नातेर्वा । Ngh. 2. 19. p. 285.

1. 11:–शचीर्मदन्त उत...पताम । Ngh. 1. 11. p. 93.

न संस्कारमाद्रियेत अर्थोनित्यः परीक्षेत । Ngh. 1. 1. p. 14. Cf. N. 2. 1:–अर्थनित्यः परीक्षेत...न संस्कारमाद्रियेत ।

2. 2:–गाहतेः क्स इति नामकरणः। ख्यातेर्वा । Ngh. 2. 5. p. 194.

2. 5:–गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छन्ति । गातेर्वौकारो नामकरणः । Ngh.1.1.p. 7.

2. 7:–शृङ्गं श्रयतेः । Ngh. 1. 17.p.161.

2. 7:–निर्ऋतिर्निरमणात् । Ngh.1.1.p.15.

2. 8:–मातान्तरिक्षं निर्मीयन्ते अस्मिन्भूतानि । Ngh. 1. 12. p. 116.

2. 8:–योनिरन्तरिक्षं महानवयवः परिवीतो वायुना । Ngh. 1. 3. p. 26.

अथवा हर्यतेः प्रेप्साकर्मणः । Ngh. 1. 2. p. 20. Cf. N. 2. 10:–हर्यतेर्वा स्यात् प्रेप्साकर्मणः ।

2. 10:–अन्तरिक्षं कस्मात् । Ngh. 1. 3. p. 27.

2. 11:–ऋषिर्दर्शनात् । Ngh. 3.3. p. 300.

व्रतमिति कर्मनाम वृणोतीति सतः ।...इदमपीतरद् व्रतम्....एतस्मादेव....वारयतीति सतः । Ngh. 2. 1. p. 165. Cf. N. 2. 13......व्रतमिति कर्मनाम निवृत्तिकर्म वारयतीति सतः ।

स्वरादित्यनाम । Ngh. 1. 9. p. 56; cf. N. 2. 14:–स्वरादित्यो भवति ।

प्राश्नुत एनं शुक्रो वर्णः । संस्पृष्टा रसान् । संस्पृष्टा भासं ज्योतिषाम् । अस्पृष्टो भासेति वा । पृश्निरादित्यः । द्यौस्तु संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च । Ngh. p. 378; cf. N. 2. 14:—पृश्निरादित्यो भवति । प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्पृष्टा...ज्योतिषाम् ।

संसृष्टा भासेति वा । अथ द्यौः । संसृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च ।

नेता रसानां नेता भासामात्मीयानाम् । ज्योतिषां प्रणायकश्चादित्यः । द्यौस्तु कमिति सुखनाम । न कम् अकम् असुखम् । न अकं यत्र स नाकः । Ngh. p. 378; cf. N. 2. 14. नाक आदित्यो भवति । नेता रसानां नेता भासाम् । ज्योतिषां प्रणयः । अथ द्यौः । कमिति सुखनाम । तत्प्रतिषिद्धं प्रतिषिध्येत ।

2. 14:–न वा अमुं लोकं जग्मुषे किंच नाकम् । इति ब्राह्मणम् । Ngh. p. 378.

2. 15:–तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः । Ngh. 1. 5. p. 32.

2. 15.:–काष्ठा दिशो भवन्ति । Ngh. 1. 6. p. 41.

2. 18:–उच्छ्रतीति व्याख्याता । Ngh. 5. 5. p. 489.

2. 21:–आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः । Ngh. 1. 10. p. 59.

2. 23:–तत्र सरस्वतीत्येतस्य नदीवद् देवतावच्च निगमा भवन्ति । Ngh. 1. 11. p. 83.

2. 24:–शुष्ममिति बलनाम । शोषयतीति सतः । Ngh. 2. 9. p. 118.

2. 25:–ऋतमित्युदकनाम । Ngh. 1. 13. p. 140.

2. 25:–कालः कालयते र्गतिकर्मणः । Ngh. 2. 14. p. 242.

एषामष्टावुत्तराणि बहुवद् । Ngh. 1 . 14. p. 150. Cf. N. 2. 27:–तेषामष्टा उत्तराणि बहुवत् ।

2. 27:–तत्र दधिक्रा इत्येतद् दधत् क्रामतीति वा दधत् क्रन्दतीति वा दधदाकारी भवतीति वा । Ngh. 1. 14. p. 146.

2. 28:–दशोत्तराण्यादिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय । Ngh. 1. 15. p. 152.

3. 1:–कर्मनामान्युत्तराणि । Ngh. 2. 1. p. 163.

3. 2:–रेक्ण इति धननाम । रिच्यते प्रयतः । Ngh. 2. 10. p. 222.

गृणातिस्तुतिकर्मा । Ngh. 1. 10. p. 60. Cf. N. 3. 5:–गृणातेः स्तुतिकर्मणः ।

3. 7:–मत्वा कर्माणि सीव्यन्ति । Ngh. 2. 3. p. 176.

3. 7, 8:–तत्र पंचजना इत्येतस्य निगमा भवन्ति .......पंच पृक्ता संख्या । लिङ्गत्रययोगेष्वविशिष्टा । Ngh. 2. 3. p. 185, cf. N. स्त्रीपुंनपुंसकेष्वविशिष्टा ।

3. 8:–असुरिति प्राणनाम । Ngh. 3. 9. p. 325.

3. 8:–ऊर्गित्यन्ननाम । ऊर्जयतीति सतः । पक्वं सुप्रवृक्णमिति वा । Ngh. 2. 7. p. 209. N. reads सुप्रवृक्णम् for सुप्रवृक्नम् ।

3. 9:–कक्ष्याः प्रकाशयन्ति कर्माणि । Ngh. 2. 5. p. 194.

3. 9–क्षिप्रनामान्युत्तराणि षड्विंशतिः । Ngh. 2. 15. p. 258.

3. 10:–दश दशतः । Ngh. 3. 1. p. 295.

3. 10:–तत्र वियात इत्येतद् वियातयत इति वियातयेति वा । Ngh. 2. 19. p. 283-4.

3. 13:–माननान्यान् जहातीति शाकपूणिः । मंहनीयो भवतीति वा । Ngh. 3. 3. p. 299.

3. 13:–तत्र ववक्षिथ विवक्षस इत्येते । Ngh. 3. 3. p. 303.

